## प्राचीनन्यायनव्यन्याययोः सैद्धान्तिकं पृथक्त्वम्

तथैव घटत्वादिमात्रावच्छिन्ने धर्मिणि नीलघटत्वाद्यवच्छिन्नविधेयताकमपि घटो नीलघट इत्याद्याकारं शाब्दं नानुमन्यन्ते।

नवीनास्तु उद्देश्यतावच्छेदकविधेयतावच्छेदकयोरन्यूनाधिकभावे उद्देश्यतावच्छेदकेऽधिकावगाहने वा यद्यपि घटो घट इत्यादौ नीलघटो घट इत्यादौ शाब्दबोधमभेदेन नेच्छन्ति, तथापि घटो नीलघट इत्यादिस्थले विधेयांशेऽधिकधर्मावगाहने भवत्येवाभेदेन शाब्दबोध इति स्वीकुर्वन्ति।

तत्र नीलघटत्वाद्यवच्छिन्नोद्देश्यताकघटत्वादिमात्रावच्छिन्नविधेयताकस्थल इव घटत्वादिमात्रावच्छिन्नोद्देश्यताकनीलघटत्वाद्यवच्छिन्नविधेयताकस्थलेऽपि उद्देश्यस्यावगतपूर्वत्वेन तस्यापूर्वबोध्यत्वरूपविधेयत्वासम्भवेन विधेयतयोद्देश्यावगाही शाब्दबोधो न सम्भवतीति प्राचीनानामभिप्रायः।

अत्र नवीनानामभिप्रायस्तु—घटत्वेनावगतेऽपि घटे घटो नीलघटो न वेति सन्देहस्य सर्वजनानुभवसिद्धतया नीलघटार्थिनस्तत्र प्रवृत्तिर्न स्यादिति तादृशप्रवृत्तिसिद्ध्यर्थं प्रकृतसंशयसमुच्छेदाय घटो नीलघट इति नीलघटत्वावच्छिन्नविधेयकघटत्वावच्छिन्नोद्देश्यकज्ञानमवश्यमभ्युपगन्तव्यम्। एवञ्च अगत्या कस्यचिदंशविशेषस्यापूर्वत्वे तद्विशिष्टः पूर्वमवगतोऽर्थस्तद्रूपेणापूर्व एव वक्तव्य इति तत्रापूर्वधर्मविशिष्टस्य तस्योद्देश्यस्य विधेयभावावगाही शाब्दबोधः स्वीकार्य्य एवेति। एवञ्च घटत्वादिमात्रावच्छिन्नविशेष्यताको नीलघटत्वादिधर्मावच्छिन्नविधेयताकः शाब्दबोधः सिद्ध एवेति स्थितमिति। तदुक्तं व्युत्पत्तिवादे गदाधरभट्टाचार्य्येण—"अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेति व्युत्पत्तिः, घटो घटः, दण्डवान् दण्डवान् पाकं पचतीत्यादौ घटत्वदण्डवत्त्वपाकत्वाद्यवच्छिन्ने तत्तद्रूपावच्छिन्नस्य तथाविधान्वयबोधानुदयात्। अथ तत्प्रयोजकसमानविभक्तिकत्वादेः सत्त्वात् कथं न तादृशान्वयबोधः? अत्राहुः—यादृशं फलं क्वचित् प्रसिध्यति तादृशस्यैवापत्तिः सम्भवति, क्लृप्तसामग्रीबलात्। यादृशञ्च सर्वथैवाप्रसिद्धं तादृशस्य चापादकाप्रसिद्धेरापत्तिरशक्यैवेति, घटत्वाद्यवच्छिन्नविशेष्यताकाभेदसंसर्गकघटत्वाद्यवच्छिन्नप्रकारकशाब्दबोधस्य क्वचिदप्यनुदयात् कथं तदापत्तिः? अथ घटो नीलघटो दण्डवान् रक्तदण्डवानित्यादौ तादृशशाब्दबोधस्य प्रसिद्धिः, विधेयकोटावधिकावगाहिनः शाब्दबोधस्य नवीनैः स्वीकारात्" इति। एवञ्च अभेदसम्बन्धेनान्वयबोधस्थले नवीनप्राचीनयोस्तथा विषममतस्य गदाधरेणोट्टङ्कनात् तत्कृतमप्युभयोर्वैषम्यं शक्यं वक्तुम्।

धात्वर्थनिर्णयेऽपि प्राचीननव्यसिद्धान्तयोर्वैलक्षण्यं समीक्ष्यते, यथा—प्राचीनमते सर्वेषामेव धातूनां निर्विशेषेण व्यापारमात्रमर्थः, न तु सकर्मकधातोः फलावच्छिन्नव्यापारोऽकर्मकधातोश्च व्यापारमात्रमित्येवं विशेषेण। तेन ग्रामं गच्छतीत्यादिवाक्यस्थले क्रिया व्यापारमात्रात्मिका धातुतो लभ्यते, संयोगादिरूपं फलं कर्मप्रत्ययेन बोध्यते, तयोर्जन्यजनकभावः संसर्गमर्य्यादया भासते। तिङ्प्रत्ययार्थः कृतिः, तत्रानुकूलत्वसम्बन्धेन धात्वर्थस्य व्यपारस्यान्वयः। कर्मप्रत्ययार्थे संयोगादिरूपे फले ग्रामादेः कर्मणो निष्ठत्वसम्बन्धेनान्वयः। एवञ्च तत्र ग्रामनिष्ठसंयोगजनकव्यापारानुकूलकृतिमानित्यर्थपर्य्यवसायी निष्ठत्वसम्बन्धेन ग्रामविशिष्टो यः संयोगो जनकत्वसम्बन्धेन तद्विशिष्टो यो व्यापाररूपो धात्वर्थः, अनुकूलत्वसम्बन्धेन तद्विशिष्टा या कृतिः तद्वानित्यर्थः प्रतीयते।

न च व्यापारमात्रस्य धात्वर्थत्वे गच्छति, त्यजतीत्यादौ तुल्यरूपो बोधो जायतामिति वाच्यम्, व्युत्पत्तिवादादौ गदाधरादिभिः सविस्तरं तादृशदोषपरिहारस्य कृतत्वात्। तदुक्तं गदाधरेण व्युत्पत्तिवादे—"व्यापारमात्रस्य धात्वर्थत्वात्। फलविशेषान्वयबोधे च धातुविशेषजन्यव्यापारोपस्थितेर्हेतुतया ग्रामं त्यजतीत्यादौ धात्वर्थे स्पन्दे ग्रामनिष्ठविभागजनकत्वमेव ग्रामं गच्छतीत्यादौ च ग्रामनिष्ठसंयोगजनकत्वमेव प्रतीयते, न तु विपरीतम्। ग्रामं गच्छतीत्यादिवच्च ग्रामं स्पन्दते इत्यादयो न प्रयोगाः। द्वितीयादेर्गम्याद्युपस्थापितस्पन्दादावेव फलान्वयबोधकत्वादित्यादि। एष सिद्धान्तः प्राचाम्।

नव्यानां मते तु संयोगादिरूपफलविशेषावच्छिन्नस्पन्दो गम्याद्यर्थः। तद्धात्वर्थतावच्छेदकफलशालित्वमेव तद्धातुकर्मत्वम्। नातो गम्यादिकर्मत्वस्य पूर्वदेशादौ प्रसङ्गः। न वा स्पन्देः सकर्मकत्वम्, तत्र फलस्य धात्वर्थतानवच्छेदकत्वात्। एवञ्च धातोरेव फलविशेषलाभात् फलान्वयिनी वृत्तिरेव द्वितीयार्थ इति।

फलस्य प्राचीनमतानुसारेण द्वितीयार्थत्वे भूमिं गच्छति न महीरुहमित्यादौ महीरुहवृत्तिसंयोगादेर्जनकतासम्बन्धावच्छिन्नप्रतियोगिताकाभाव एव नञर्थो वाच्यः, स च वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकतयाऽप्रसिद्धेः। नव्यमते तु द्वितीयार्थस्याधेयत्वस्य फलनिष्ठोऽभाव एव तथेति नानुपपत्तिरित्यादिरूपेण प्राचीनमते दोषमुपपाद्य तदपेक्षया नव्यमतस्य समुत्कर्षप्रतिपादनाय बहुधा विचारः कृतो गदाधरेण। विशेषजिज्ञासुभिस्तत्रावधानं देयम्। तत्प्रतिपादितनिरुक्तसिद्धान्तभेदकृतमपि द्वयोः प्रस्थानयोर्वैषम्यमेतेनावसेयम्।

## प्राचीनन्यायनव्यन्याययोः सैद्धान्तिकं पृथक्त्वम्

अन्यच्च गदाधरेण व्युत्पत्तिवादे वृत्त्यनियामकसंसर्गस्य प्रतियोगितावच्छेदकत्वे दोषाभावस्योपपादनात् तदिदं नव्यन्यायसम्मतं तस्य प्रतियोगितानवच्छेदकत्वञ्च प्राचीनन्यायसम्मतमिति प्रतिभाति, तेन तत्रापि तयोर्वैषम्यं शक्यते वक्तुम्।

अन्यदपि वैषम्यं यथा—गौतमीयन्यायदर्शनप्रवृत्तेः सुचिरात् परं प्रायेण गौतमसूत्रोपदिष्टानेव पदार्थानुपादाय किञ्चित् किञ्चिद् वैषम्येण न्यायसारं नाम निबन्धं निर्माय भासर्वज्ञः प्रवर्तयामास कञ्चित् प्राचीनन्यायसम्प्रदायम्। तत्र तेनागमप्रामाण्यमवलम्ब्य मुक्तिदशायामत्यन्तदुःखनिवृत्त्या सममानन्दविशेषानुभूतिरप्युपपादिता। यस्या विशेषेण प्रतिषेधः कृतो न्यायसूत्रभाष्ये वात्स्यायनेन। तथापि न्यायसारग्रन्थस्य प्राचीनन्यायग्रन्थतया तदुपदिष्टसिद्धान्तस्य प्राचीनन्यायसिद्धान्ततया परिग्रहस्यैवोचितत्वात्, नव्यन्यायसिद्धान्ते च दुःखात्यन्तनिवृत्तिमात्रस्यैव मुक्तिदशायामभ्युपगमात् तादृशसिद्धान्तभेदोऽपि द्वयोः पार्थक्यं प्रयोजयति। विस्तरस्तावदस्य प्रकरणस्य मयैव प्रस्तुतपूर्वे न्यायवैशेषिकदर्शनयोः पृथग्दर्शनत्वप्रवचने समनुसन्धेयः।

प्राचीनन्यायनयापेक्षया नव्यन्याये बहव एव विशेषाः समुपलभ्यन्ते, ये प्राचीनन्यायाद् नव्यन्यायस्य भेदमनायासेनैव गमयन्ति। तत्र ज्ञाने अन्तरा भासमानपदार्थगतविषयताद्वयस्याभेदस्वीकर्तृसिद्धान्ते रक्तदण्डवत्पुरुषवान् देश इत्यादिज्ञानं प्रति पुरुषाभाववान् दण्ड इत्यादिनिश्चयस्य प्रतिबन्धकत्वापत्तिवारणाय गदाधरकल्पितस्तादृशविषयताद्वयस्यावच्छेद्यावच्छेदकभाव एको विशेषो नव्यन्यायस्य।

कारणता-प्रतिबन्धकता-विशेषाणामवच्छेदकीभूताप्रामाण्यज्ञानाभावादीनामनुगतरूपेण लक्षणादिष्वभावविशिष्टान्यत्वगर्भे गदाधरसम्प्रदायसिद्धो निवेशः कश्चन विशेषः। अनुमितेर्जातिघटितलक्षणं शिरोमणिना यत् समुद्भावितं सोऽप्येको नव्यन्यायस्य विशेषः।

यज्ञपतिसम्प्रदायानुमतं सम्बन्धसम्बन्धस्य भानम्। हेत्वाभासलक्षणादिषु विशिष्टान्तराघटितत्व-विशिष्टद्वयाघटितत्वाव्यापकीभूतविषयताशून्यत्वप्रभृतीनां प्राचीनन्यायनिबन्धेषु नाम्नाप्यसूत्रितानां नव्यन्यायतन्त्रे परिग्रहोऽपि प्राचीनन्यायतो नव्यन्यायस्य विशेषमाधत्ते।

सोन्दडमतानुयायिनां प्राचीनानां मते व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्याभ्युपगतस्य मणिकारेणास्वीकारः कश्चन नव्यन्यायगतो विशेषः।

पारिभाषिकबहुपदार्थाभ्युपगमाधीनं बहुसिद्धान्तवैचित्र्यमपि महानेव विशेषो नव्यन्यायस्य। अनुगमादीनां विचित्रा पद्धतिरपि महान्तमेव विशेषमाधत्ते प्राचीनन्यायादिनिखिलतन्त्रेभ्यो नव्यन्यायतन्त्रस्येति सुतरामतिरोहितं नव्यन्यायनिष्णातानां विदुषाम्।

तदेतत् सिद्धं सन्देहाननुविद्धं यदशेषैरेव विशेषैः प्राचीनन्यायतन्त्राद् विलक्षणं नव्यन्याय-तन्त्रमिति।

दिङ्मात्रमेतत् प्रतिपादितं मया विशेषतो धीविभवैः समीक्ष्यताम्।
गवेषणासाधनया नयद्वये ध्रुवं विशेषान्तरमभ्युपास्यते॥

॥ इति शिवम् ॥



# अभिज्ञानशाकुन्तलसमीक्षा

श्रीमहादेव उपाध्यायः, वा० सं० वि० वि० साहित्याध्यायकः ।

( २२० पृष्ठतोऽनुवृत्तम् )

नाटके षट्त्रिंशल्लक्षणानि भवन्ति । तानि शाकुन्तले समीक्ष्यन्ते । तानि यथा—

भूषणाक्षरसंघातौ शोभोदाहरणं तथा ।
हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः ॥
निदर्शनाभिप्रायौ च प्राप्तिर्विचार एव च ।
दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा ॥
विशेषणनिरुक्ती च सिद्धिर्भ्रंशविपर्ययौ ।
दाक्षिण्यानुनयौ मालाऽर्थापत्तिर्गर्हणं तथा ॥
पृच्छाप्रसिद्धिः सारूप्यं संक्षेपो गुणकीर्तनम् ।
लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा ॥ इति ।

तत्र भूषणलक्षणं साहित्यदर्पणे—

"गुणैः सालङ्कारैर्योगस्तु भूषणम्" इति ।

षोडशाध्याये भरतेनाप्युक्तम्—

अलङ्कारैर्गुणैश्चैव बहुभिः समलङ्कृतम् ।
भूषणैरिव विन्यस्तैस्तद्भूषणमिति स्मृतम् ॥

तत्र शाकुन्तले प्रथमेऽङ्के राजसूतयोरुक्तिप्रत्युक्तिवाक्येषु "कृष्णसारे ददच्चक्षुः" इत्यारभ्य "यदालोके सूक्ष्मम्" इत्यन्तेषूत्प्रेक्षास्वभावोक्तिहेत्वलङ्कारादिविविधालङ्कारसद्भावाद् माधुर्यौजःप्रसादरूपगुणगणसद्भावाच्च भूषणमिति ।

अक्षरसंघातलक्षणं तु दर्पणे—

"वर्णनाक्षरसंघातश्चित्रार्थैरक्षरैर्मितैः" इति ।

यथा शाकुन्तले तृतीयेऽङ्के—राजा—"कच्चित्सखीं वो नातिबाधते शरीरसन्तापः ? प्रियंवदा—( सस्मितम् ) इदानीं लब्धौषध उपशमं गमिष्यति" इति । शोभालक्षणन्तु दर्पणे—

सिद्धैरर्थैः समं यत्राप्रसिद्धोऽर्थः प्रकाशते ।
श्लिष्टश्लक्षणचित्रार्था सा शोभेत्यभिधीयते ॥ इति ।

तत्र शाकुन्तले सप्तमेऽङ्के राजबालतापसीनां वाक्येषु—"यावदस्य शिशोर्मातरम्" इत्यारभ्य "किं शकुन्तलेत्यस्य मातुराख्या" इत्यन्तेषु शोभा नाम लक्षणम्।

उदाहरणलक्षणं साहित्यदर्पणे यथा—

यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात्।
साध्यतेऽभिमतश्चार्थस्तदुदाहरणं मतम्॥ इति।

अस्योदाहरणं शाकुन्तले चतुर्थेऽङ्केऽनसूयां प्रति प्रियंवदावाक्यम्। प्रियंवदा—"त एनां लज्जावनतमुखीं परिष्वज्य स्वयं तातकण्वेन एवमभिनन्दितम्—वत्से दिष्ट्या धूमोपरुद्ध दृष्टेरपि यजमानस्य पावकस्यैव मुखे आहुतिर्निपतिता, सुशिष्यपरिदत्तेव विद्याऽशोचनीयासि मे संवृत्ता। अद्यैव त्वामृषिपरिरक्षितां कृत्वा भर्तुः सकाशं विसर्जयामि"।

हेतुलक्षणन्तु दर्पणे यथा—"हेतुर्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनात्"।

नाट्यशास्त्रे तु—

बहूनां भाषमाणानामनेकार्थविनिर्णयात्।
सिद्धौ समानवचनं हेतुरित्यभिसंज्ञितः॥

हेतूदाहरणन्तु शाकुन्तले षष्ठेऽङ्के, राजा—"निपुणो भवान् अस्त्यत्र ममापि भावचिह्नम्-

स्विन्नाङ्गुलिविनिवेशाद् रेखाप्रान्तेषु दृश्यते मलिना।
अश्रु च कपोलपतितं लक्ष्यमिदं वर्णकोच्छ्वासात्॥

अत्र "अस्त्यत्र ममापि भावचिह्नम्" इत्यस्मिन् वाक्यार्थे पद्यार्थो हेतुतयोपन्यस्तः।
संशयनामनाटकलक्षणस्य लक्षणन्तु साहित्यदर्पणे यथा—

"संशयोऽज्ञाततत्त्वस्य वाक्ये स्याद्यदनिश्चयः"

मुनिनाप्युक्तम्—

अपरिज्ञाततत्त्वार्थे यत्र वाक्यं प्रयुज्यते।
अनेकत्वाद् विचाराणां संशयः परिकीर्तितः॥ इति।

एतदुदाहरणं तु शाकुन्तले पञ्चमेऽङ्के, राजा—(शकुन्तलां निर्वर्ण्य स्वगतम्)

इदमुपनतमेवं रूपमक्लिष्टकान्ति प्रथमपरिगृहीतं स्यान्न वेत्यध्यवस्यन्।
भ्रमर इव निशान्ते कुन्दमन्तस्तुषारं न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम्॥ इति।

दृष्टान्तो यथा शाकुन्तले द्वितीयेऽङ्के ऋषिकुमारकवाक्ये, एकः—"अहो दीप्तिमतोऽपि विश्वसनीयताऽस्य वपुषः, अथवा उपपन्नमेतस्मिन् ऋषिकल्पे राजनि। कुतः—

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः॥

अत्र "अहो दीप्तिमतोऽपि विश्वसनीयताऽस्य वपुषः" अस्यार्थस्योपपादनायोत्तरवाक्यं पद्यञ्च हेतुरूपेण प्रवृत्तम्। दृष्टान्तलक्षणन्तु दर्पणे—

"दृष्टान्तो यस्तु पक्षेऽर्थसाधनाय निदर्शनम्"। व्याख्यातञ्च श्रीरामचरणतर्कवागीशैः—'पक्षेऽर्थस्य साधनाय ज्ञापनाय निदर्शनं हेतुदर्शनम्' इति। नाट्यशास्त्रेऽप्युक्तम्—

सिद्धौ पूर्वोपलब्धौ यः समत्वमुपपादयेत्।
निदर्शनकृतस्तज्ज्ञैः स दृष्टान्त इति स्मृतः॥

तुल्यतर्को यथा शाकुन्तले सप्तमेऽङ्के राजतापस्योः संवादे बालवाक्यार्थेन तापसीवाक्यार्थेन च प्रकृतेन पत्नीसमागमरूपस्य भाविनोऽर्थस्य सूचनरूपस्तर्कः। तल्लक्षणन्तु दर्पणे—"तुल्यतर्को यदर्थेन तर्कः प्रकृतिगामिना" इति। व्याख्यातञ्च रामचरणतर्कवागीशैः—'अर्थेन वस्तुना तर्को भाव्यर्थसूचनम्। प्रकृतिगामिना—प्रकृतेन न तु प्रकृतिविपर्यासरूपेणाद्भुतेन'। पदोच्चयो यथा शाकुन्तले प्रथमेऽङ्के राजवाक्ये—

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्॥

अत्र पदपदार्थयोः सौकुमार्यं सदृशमेव। पदोच्चयलक्षणं दर्पणे यथा—

"सञ्चयोऽर्थानुरूपो यः पदानां स पदोच्चयः" इति।

व्याख्यातञ्च तेनैव—संचयः समूहः, अर्थानुरूपोऽभिधेयसदृशः। सुकुमारार्थे सुकुमारपदसञ्चयस्य, उद्भटार्थे उद्भटपदसञ्चयस्य प्रयोग इत्यर्थः।

निदर्शनं यथा शाकुन्तले प्रथमेऽङ्के राजवाक्ये—

मानुषीभ्यः कथं नु स्यादस्य रूपस्य सम्भवः।
न प्रभातरलं ज्योतिरुदेति वसुधातलात्॥ इति।

तल्लक्षणं यथा दर्पणे—

यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् ।
परपक्षव्युदासार्थं तन्निदर्शनमुच्यते ॥ इति ।

अभिप्रायो यथा शाकुन्तले प्रथमेऽङ्के—

इदं किलाव्याजमनोहरं वपुः तपःक्लमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति ॥

अभिप्रायलक्षणन्तु दर्पणे—"अभिप्रायस्तु सादृश्यादभूतार्थस्य कल्पना" । अभूतार्थस्यासम्भविनो वस्तुनः । अत्रोत्पलपत्रधारया शमीलताच्छेदनमिव शकुन्तलया तपःसाधनमसम्भवि, इत्येवमत्र सादृश्यादभूतार्थस्य कल्पनमिति ।

प्राप्तिर्यथा शाकुन्तले तृतीयेऽङ्के राजवाक्ये–( अवलोक्य ) "हन्तास्मिन् वेतसलतामण्डपे सन्निहितया शकुन्तलया भवितव्यम् । तथाहि—

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥

अत्र हि पदपङ्क्तिविशेषणैः 'अस्मिन् लतामण्डपे' इत्यादिवाक्यस्यार्थोऽनुमीयते । प्राप्तिलक्षणं साहित्यदर्पणे—

"प्राप्तिः केनचिदंशेन किञ्चिद्यत्रानुमीयते" इति । अंशेन विशेषणेन । विचारो यथा शाकुन्तले प्रथमेऽङ्के—राजा ( शकुन्तलां विलोकयन् आत्मगतम् ) किं खलु यथा वयमस्यामियमप्यस्मान् प्रति तथा स्यात् ?

अथवा लब्धावकाशा मे मनोवृत्तिः । कुतः—

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यवहिता मयि भाषमाणे ।
कामं न तिष्ठति मदाननसम्मुखीयं
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ।

अत्र वाचं न मिश्रयतीत्यादि युक्तिवाक्यैः शकुन्तलागतस्याप्रत्यक्षस्य मदनविकाररूपस्यार्थस्य साधनमिति विचारः । विचारलक्षणन्तु दर्पणे—"विचारो युक्तिवाक्यैर्यदप्रत्यक्षार्थसाधनम्" युक्तिवाक्यैर्हेतुबोधकवाक्यैः । साधनं ज्ञापनमिति ।

दिष्टनामकलक्षणं यथा शाकुन्तले तृतीयेऽङ्के, राजा—( सहर्षम् ) "श्रुतं यत् श्रोतव्यम् ।

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥

अत्र स्मरस्य दिवसरूपकालसारूप्येण वर्णनमिति दिष्टम् । दिष्टलक्षणं यथा दर्पणे—"देशकालस्वरूपेण वर्णनादिष्टमुच्यते" इति । उपदिष्टं यथा शाकुन्तले तृतीयेऽङ्के राजवाक्यम्—

गान्धर्वेण विवाहेन बह्व्योऽथ मुनिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः ॥

तत्रैव चतुर्थेऽङ्के च कण्वः—सा त्वमितः पतिगृहं प्राप्य—

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृताऽपि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ इति ।

उपदिष्टलक्षणञ्च दर्पणे—"उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः" इति । गुणातिपातो यथा शाकुन्तले तृतीयेऽङ्के, राजवाक्यम् —

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥

अत्र कुसुमशरत्वस्य विपरीतं कार्यं बाणानां वज्रसारीकरणम् । शीतरश्मित्वगुणस्य विपरीतकार्यं मयूखैरग्निविसर्ग इति गुणातिपातः । गुणातिपातलक्षणन्तु दर्पणे—"गुणातिपातः कार्यं यद् विपरीतं गुणान् प्रति" इति । गुणातिशयो यथा शाकुन्तले प्रथमेऽङ्के राजवाक्ये—

लोलां दृष्टिमितस्ततो वितनुते सभ्रूलताविभ्रमां-
माभुग्नेन विवर्तिना बलिमता मध्येन कम्रस्तनी ।
हस्ताग्रं विधुनोति पल्लवनिभं सीत्कारभिन्नाधरा
जातेयं भ्रमराभिलङ्घनभिया वाद्यैर्विना नर्तकी ॥

अत्र वाद्यैर्विना नर्तकी इति सामान्यगुणोद्रेको नर्तक्युपमेयभूतायां शकुन्तलायां प्रदर्शितः । नर्तक्या हि सवाद्यं नर्तकीत्वम्, अस्यास्तु वाद्यैर्विनैवेति ।

गुणातिशयलक्षणं यथा दर्पणे—"यः सामान्यगुणोद्रेकः स गुणातिशयो मतः" इति । विशेषणं यथा शाकुन्तले द्वितीयेऽङ्के दौवारिकवाक्यम्—

"अध्याक्रान्ता वसतिरमुना" इति पद्ये सर्वाणि विशेषणानि समान्युक्त्वा, "केवलं राजपूर्वः" इति विशेष उक्तः । विशेषणलक्षणन्तु दर्पणे—"सिद्धानर्थान् बहूनुक्त्वा विशेषोक्तिर्विशेषणम्" । निरुक्तिर्यथा शाकुन्तले चतुर्थेऽङ्के कण्ववाक्यम्—

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या
नादत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम् ।
आदौ वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥

अत्र पूर्वसिद्धार्थकथनान्निरुक्तिः । निरुक्तिलक्षणन्तु दर्पणे यथा—

"पूर्वसिद्धार्थकथनं निरुक्तिरिति कीर्त्यते" इति । सिद्धिर्यथा शाकुन्तले पञ्चमेऽङ्के कञ्चुकीवाक्यम्—

भानुः सकृद्युक्ततुरङ्ग एव रात्रिंदिवं गन्धवहः प्रयाति ।
बिभर्ति शेषः सततं धरित्रीं षष्ठांशवृत्तेरपि धर्म एषः ॥

अत्र हि भानुगन्धवहशेषगुणानामेकत्र राजनि कीर्तनात् सिद्धिः । एतेषां गुणसाम्यञ्च षष्ठांशवृत्तेरपि धर्म एष इति चतुर्थपादेन सूचितम् । अत्र सकृद् युक्ततुरङ्गत्वं राज्ञि स्वकर्मणि सदोदितत्वम् । रात्रिंदिवं प्रयाणं चाऽनलसत्वम् । सततं धरित्रीधारणञ्च सततं पालनमित्यवधेयम् । सिद्धिलक्षणं च दर्पणे—"बहूनां कीर्तनं सिद्धिरभिप्रेतार्थसिद्धये" इति ।

भ्रंशो यथा शाकुन्तले पञ्चमेऽङ्के शकुन्तलावाक्ये—"आर्यपुत्र ! ( इत्यर्धोक्ते ) अथवा संशयित इदानीमेष समुदाचारः । पौरव !…" इति । भ्रंशलक्षणन्तु दर्पणे—

"दृप्तादीनां भवेद् भ्रंशो वाच्यादन्यत्तु यद्वचः" इति ।

अत्र दृप्तादीनामित्यादिपदेन हृष्टदुःखितादीनां ग्रहणम् । विपर्ययो यथा शाकुन्तले सप्तमेऽङ्के राज्ञा सह तापसीनां संवादे—"आकृतिसंवादेन" पौरव इति व्यपदेशेन, अस्य बालकस्य जननी अप्सरःसम्बन्धेन देवगुरोस्तपोवने प्रसूतेति तापसीवाक्येन, कस्तस्य धर्मपरित्यागिनो नाम कीर्तयिष्यतीति तापसीवाक्येन, सर्वदमन ! पश्य शकुन्तलावण्यमिति तापसीवाक्येन चायं

मत्पुत्र एवेति जातस्यापि विचारस्य सन्देहादन्यथाभावः, अथवा सन्ति पुनर्नामधेयसादृश्यानि” इत्यादिवाक्येन प्रादुष्कृतः।

विपर्ययलक्षणं यथा दर्पणे—

“विचारस्यान्यथाभावः सन्देहात्तु विपर्ययः” इति।

यत्तु श्रीरामचरणतर्कवागीशेन व्याख्यातम्—“विचारस्य तत्त्वनिश्चयस्यान्यथाभावोऽभावः” इति, तन्न युक्तम्; अन्यथाभावोऽन्यथात्वमित्यर्थस्यैव युक्तत्वात्।

दाक्षिण्यं द्विधा—चेष्टया परिचितानुवर्तनम्, वाचा परचित्तानुवर्तनञ्च। तत्राद्यं यथा शाकुन्तले तृतीयेऽङ्के शकुन्तलावाक्ये, शकुन्तला—“अतः परं न समर्थास्मि विलम्बितुम्, भवत्वेनैव व्यपदेशेन आत्मानं दर्शयिष्यामि” (इत्युपसर्पति)। अत्र ह्युपसर्पणरूपया चेष्टया शकुन्तलाया राजचित्तानुवर्तनम्। यत्तु श्रीरामचरणतर्कवागीशैः दर्पणटीकायामुदाहृतम्—चेष्टया यथा शाकुन्तले—“तदहमेनामनृणां करोमि इत्यङ्गुलीयकं ददाति। अत्राङ्गुलीयकदानरूपया चेष्टया शकुन्तलाचित्तप्रीणनम्” इति, तन्न युक्तम्—‘राजा अङ्गुलीयकदानेन ममानृण्यं सम्पादयेत्’ इति शकुन्तलाया अभिप्रायाभावात्। द्वितीयं यथा शाकुन्तले द्वितीयेऽङ्के सेनापतिवाक्ये—देव! प्रलपत्येष वैधेयः, ननु प्रभुरेव निदर्शनम्। पश्यतु देवः—

मेदच्छेदकृशोदरं लघु भवत्युत्साहयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः॥

इदं च राजचित्तानुवर्तनं वाचा। व्याकृतश्चास्य वाक्यस्य राजचित्तानुवृत्तिपरत्वं प्राक्। ‘अहं तावत् स्वामिनः चित्तमनुवर्तिष्ये’ इति वाक्येन। एवमन्यत्रापि तत्र तत्र वाचा परचित्तानुवर्तनरूपं दाक्षिण्यं शाकुन्तले दृश्यते। तद्यथा तृतीयेऽङ्के शकुन्तलावाक्ये—“तथास्तु” इति। तत्रैव शकुन्तला–( स्मितं कृत्वा ) “यथा ते रोचते” इति। एवमन्यत्रापि। दाक्षिण्यलक्षणं यथा दर्पणे—

“दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्तनम्” इति।

अनुनयो यथा शाकुन्तले षष्ठेऽङ्के मातलिवाक्ये—

"सख्युस्ते स किल शतक्रतोरवध्यस्तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्तिस्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥

स भवानात्तशस्त्र एव इदानीं देवरथमारुह्य विजयाय प्रतिष्ठताम्" इति। अनुनय-लक्षणन्तु दर्पणे—

"वाक्यैः स्निग्धैरनुनयो भवेदर्थस्य साधनम्" इति।

माला यथा शाकुन्तले तृतीयेऽङ्के राजवाक्ये, राजा—

किं शीकरैः क्लमविमर्दिभिरार्द्रवातं सञ्चालयामि नलिनीदलतालवृन्तम्।
अङ्के निधाय चरणावुत पद्मताम्रौ संवाहयामि करभोरु ! यथा सुखं ते ॥

अत्र दुष्यन्तस्य सुरतरूपस्वाभीष्टसिध्यर्थं शकुन्तलायां समीरसञ्चारपादसंवाहनकार्ययोर्‍र्पनम्। मालालक्षणं यथा दर्पणे—

"माला स्याद्यदभीष्टार्थं नैकार्थप्रतिपादनम्" इति।

अर्थापत्तिर्यथा शाकुन्तले चतुर्थेऽङ्केऽनसूयावाक्ये, अनसूया—( स्मृत्वा ) "अथवा न तस्य राजर्षेरपराधो दुर्वाससः शापः खल्वेष प्रभवति, अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वा एतावतः कालस्य वार्तामात्रमपि न विसर्जयति" इति।

अत्रान्यथा कथं स राजर्षिरित्यादि वाक्येनार्थान्तरोक्त्या "दुर्वाससः शापः खल्वेष प्रभवति" इति वाक्यार्थरूपोऽन्यार्थः प्रतीयते।

अर्थापत्तिलक्षणं यथा दर्पणे षष्ठे परिच्छेदे—

"अर्थापत्तिर्यदन्यार्थोऽर्थान्तरोक्तेः प्रतीयते" इति।

गर्हणं यथा शाकुन्तले पञ्चमेऽङ्के, शार्ङ्गरवः— ( सासूयम् ) "श्रुतं भवद्भिरधरोत्तरम्,

आजन्मनः शाठ्यमशिक्षितो यस्तस्याप्रमाणं वचनं जनस्य।
पराभिसन्धानमधीयते यैर्विद्येति ते सन्तु किलाप्तवाचः ॥

अत्र राज्ञः पराभिसन्धानरूपम्, अनाप्तवाक्स्वरूपञ्च दूषणमुद्घोष्य गर्हणा कृता।

गर्हणलक्षणन्तु दर्पणे—

"दूषणोद्घोषणायां तु भर्त्सना गर्हणं तु तत्" इति ।

पृच्छा यथा शाकुन्तले सप्तमेऽङ्के राजवाक्ये, राजा—

"भगवन्! इमामाज्ञाकरीं वो गान्धर्वेण विवाहविधिना उपयम्य कस्यचित् कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात् प्रत्यादिशन् अपराद्धोऽस्मि तत्रभवतो युष्मद्गोत्रस्य कण्वस्य, पश्चादेनामङ्गुरीयकदर्शनारूढस्मृतिरूढपूर्वामवगतोऽहं तच्चित्रमिव मे प्रतिभाति ।

यथा गजे साधु समक्षरूपे कस्मिन्नपि क्रामति संशयः स्यात् ।
पदानि दृष्ट्वाऽथ भवेत् प्रतीतिस्तथाविधो मे मनसो विकारः ॥

अत्र मारीचाभ्यर्थनपरै राजवाक्यैः स्वमनोमोहरूपस्यार्थस्य कारणान्वेषणं राज्ञा कृतमिति ।

पृच्छालक्षणन्तु दर्पणे—

"अभ्यर्थनापरैर्वाक्यैः पृच्छाऽर्थान्वेषणं मता" इति ।

प्रसिद्धिर्यथा शाकुन्तले सप्तमेऽङ्के राजवाक्ये, राजा—"मातले !

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद् यज्ञभागेश्वरम् ।
यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसम्भवमिदं तत्स्रष्टुरेकान्तरम् ॥

अत्र लोकप्रसिद्धैरर्थैर्द्वादशादित्यशक्रवामनदक्षमरीचिरूपैरदितिकश्यपयोर्द्वन्द्वस्य परिचयकरणात् प्रसिद्धिः ।

यत्तु जीवानन्दविद्यासागरेण शाकुन्तले प्रथमेऽङ्के राजवाक्ये—

"सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव न मधुराणां मण्डनंनाकृतीनाम् ॥
कठिनमपि मृगाक्ष्या वल्कलं कान्तरूपं
न मनसि रुचिभङ्गं स्वल्पमप्यादधाति ।

विकचसरसिजायाः स्तोकनिर्मुक्तकण्ठं
निजमिव कमलिन्याः कर्कशं वृन्तजालम् ॥

अत्र श्लोकद्वयेन प्रसिद्धिर्नाम नाटकलक्षणं दर्शितम्" इत्युक्तम्, तन्न सम्यक् प्रतिभाति, तथाहि—शैवलानुविद्धस्य सरसिजस्य लक्ष्मवतः शीतांशोः कठिनस्य वल्कलस्य चोत्कृष्टत्वाभावात् तैश्च कस्यचिदर्थस्य परिचायनाभावाच्च। तेषां सादृश्येन हि शकुन्तलाया मनोज्ञत्वस्यैव परिचयादित्येवं नात्र प्रसिद्धिलक्षणानुगमः। प्रसिद्धिलक्षणञ्च दर्पणे—"प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधनम्" इति। अर्थसाधनं पदार्थपरिचयः।

सारूप्यं यथा शाकुन्तले षष्ठेऽङ्के, राजा—(सक्रोधम्) कथं मामेवोद्दिशति? आः! तिष्ठ तिष्ठ कौणवापसद! त्वमिदानीं न भवसि"। अत्र विदूषकमारणोद्यमरूपकौणवकार्यकारित्वेन कौणपसदृशस्य मातलेः सारूप्यात् सादृश्यजनितभ्रमाद् राज्ञः क्षोभवर्धनरूपं सारूप्यम्। सारूप्यलक्षणं दर्पणे—

"सारूप्यमनुरूपस्य सारूप्यात् क्षोभवर्धनम्" इति।

संक्षेपो यथा शाकुन्तले षष्ठेऽङ्के, राजा—

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥

अनेन हि वाक्येन बन्धुभिरविशेषेण बन्धूनां स्थाने राज्ञा आत्मा निर्दिष्ट इति संक्षेपः। संक्षेपलक्षणन्तु दर्पणे—

"संक्षेपो यत्तु संक्षेपादात्मान्यार्थे प्रयुज्यते" इति।

व्याख्यातञ्च श्रीरामचरणतर्कवागीशेन संक्षेपाद् अविशेषात्। अन्यार्थे अर्थान्तरस्थाने। प्रयुज्यते निर्दिश्यत इति।

(सावशेषम्)



# प्रत्यक्षज्ञानमीमांसा

श्रीश्रीरामपाण्डेयः, वा० सं० वि० वि० न्यायवैशेषिकाध्यापकः ।

शीर्षण्यां काञ्चिदन्यां ललितगतिहसद्वीचिभिश्चित्तचौरीं
चाञ्चल्योदञ्चदक्षं क्षितिधरतनयां वीक्षमाणां नवोढाम् ।
आलक्ष्योल्लासलीलैः शशिरुचिरुचिरैर्जटाजूटैरदभ्रै-
स्तामन्तर्धित्सुरीशः कलयतु कुशलं शेमुषीं मामकीनाम् ॥

नव्यैः स्तव्यैः सततविजयिभिः कर्कशैर्वक्रतर्कै-
र्जित्वा वादीभयूथान् मृगपतिविलसद्विक्रमोऽनेककृत्वः ।
विद्यानां पारदृश्वा गुरुवरबदरीनाथविश्वेश्वरश्रीः
प्रादुःसंबोभवीतु प्रथितगुणनिधिर्मे हृदन्तः प्रसन्नः ॥

## चार्वाकमतम्

मीमांसकप्रभृतयः कियन्तो विचारकाः स्वर्गं मानवजीवनस्य चरमं लक्ष्यमामनन्ति । पूर्णानन्दावस्था स्वर्गपदेन व्यपदिश्यते । इह लोके वैदिकाचरणानुसरणेन परलोके स्वर्ग उपलभ्यते, परन्तु परलोके चार्वाका न विश्वसन्ति । तेषां नये स्वर्गे किमपि प्रमाणं नास्ति । पुरोहितानां स्वर्गस्य नरकस्य च कल्पना मिथ्याभूता । पुरोहितप्रभृतयः स्वकीयव्यावसायिकलाभार्थं विविधभयं प्रलोभनं चोपस्थाप्य जनान् प्रलोभयन्ति । किन्तु बुद्धिमन्तः प्रतारितास्तैर्न भवन्ति । तथा चोक्तं सर्वदर्शनसंग्रहे—

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥
अत्र चत्वारि भूतानि भूमिवार्यनिलानलाः ।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते ॥
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत् ।
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः ॥
देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः ।
मम देहोऽयमित्युक्तिः सम्भवेदौपचारिकी ॥

अङ्गनालिङ्गनाजन्यं सुखमेव पुमर्थता ।
कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते ॥
लोकसिद्धो भवेद् राजा परेशो नापरः स्मृतः ।
देहस्य नाशो मुक्तिस्तु न ज्ञानान्मुक्तिरिष्यते ॥
अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथानिलः ।
केनेदं चित्रितं तस्मात् स्वभावात् तद्व्यवस्थितिः ॥
न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः ।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः ॥
पशुश्चेन्निहितः स्वर्गं ज्योतिष्टोमे गमिष्यति ।
स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते ॥
मृतानामपि जन्तूनां श्राद्धं चेत् तृप्तिकारणम् ।
गच्छतामिह जन्तूनां वृथा पाथेयकल्पनम् ॥
स्वर्गस्थिता यदा तृप्तिं गच्छेयुस्त्वत्र दानतः ।
प्रासादस्योपरिस्थानामिह कस्मान्न दीयते ॥
यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥
यदि गच्छेत् परं लोकं देहादेव विनिर्गतः ।
कस्माद् भूयो न चायाति बन्धुस्नेहसमाकुलः ॥
त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः ।
जर्फरीतुर्फरीत्यादि पण्डितानां वचः स्मृतम् ॥ इति ।

अन्यान्यदार्शनिकसमर्थितमोक्षेऽपि विश्वासो न कर्तव्यः । चार्वाकाः कथयन्ति यद् आत्मनः शारीरिकबन्धनमोचनमेव यदि मोक्षपदार्थस्तदा कदापि मुक्तिर्न सम्भवा, यतः शरीरादतिरिक्तस्य आत्मनः काचन सत्तैव न सिद्धा । यदि मोक्षो नाम जीवनकाल एव दुःखानां पर्यवसानं तदपि न शोभनम्, यतः शरीरेण सह सुखदुःखानामविच्छेद्यः सम्बन्धः सुदृढः । साधनैर्दुःखानामल्पीयस्त्वं शक्यं सुखानां संवर्धनमपि सम्भवम् । दुःखानां पूर्णविनाशोऽन्यैरुपायैरसम्भव एव, तेषां पूर्णविनाशस्तु मृत्युरेव । अतो जीवनदशायां दुःखानां पूर्णविनाशकल्पना कमठीस्तनायितैव । उक्तञ्च बृहस्पतिसूत्रे बृहस्पतिना—"मरणमेव अपवर्गः" इति ।

## प्रत्यक्षज्ञानमीमांसा

केचित् स्वाभाविकप्रवृत्तीस्तिरस्कृत्य सुखदुःखरहितावस्थां वाञ्छन्ति, विचारयन्ति च ते प्रायः सुखेन सह दुःखस्यापि सम्मिश्रणं सर्वत्रैवेति। अतः सुखमपि नार्जनीयमिति तेषां सिद्धान्तः। तत्र चार्वाकाः कथयन्ति न खलु दूरदर्शिनस्ते यतो विचारवान् कश्चनापि मानवस्तुषसम्पृक्तत्वात्तण्डुलं न गृह्णाति किम्? पशुभिः कृषिध्वंसभिया कृषिं न करोति कश्चन कृषकः किम्? दोषभिया गुणा नार्जनीया भवन्ति किम्? शङ्कावसरस्य सर्वत्रैवोपलभ्यमानतया कुत्रापि केषाञ्चन प्रवृत्तिः साधीयसी न स्यात्। उक्तञ्च—

शङ्काभिः सर्वमाक्रान्तमन्नं पानञ्च भूतले।
प्रवृत्तिः कुत्र कर्तव्या जीवितव्यं कथं नु वा॥

तस्माद् दुःखोपसृष्टमपि सुखमवश्यमर्जनीयम्। उक्तञ्च ( सर्वदर्शनसंग्रहे )—

त्याज्यं सुखं विषयसङ्गमजन्म पुंसा
दुःखोपसृष्टमिति मूर्खविचारणैषा।
व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भोस्तुषकणोपहितान् हितार्थी॥

'नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते', 'नहि मृगाः सन्तीति शाल्यो नोप्यन्ते' इति।

यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥

तथा च वर्तमानशरीरद्वारा यावत्सुखमुपलब्धुं शक्यं तावदवश्यमर्जनीयम्। पारलौकिकसुखस्य मिथ्याशायां वर्तमानजीवनोपलब्धं सुखं कदापि न हेयम्। सन्दिग्धस्वर्णमुद्रापेक्षया निःसंदिग्धं वराटकप्रापणमधिकं मूल्यवत्। सफलं जीवनं तस्यैव येन वर्तमानजीवनेऽधिकाधिकं सुखमुपलब्धम्। एवंरीत्या प्रत्यक्षज्ञानेन समर्थितं तत्त्वं स्वीकुर्वन्ति चार्वाकाः। प्रत्यक्षज्ञानासमर्थितं किमपि नाङ्गीकुर्वन्ति ते, यतस्तेषां दर्शने केवलस्य एकस्य प्रत्यक्षस्यैव प्रामाण्यमङ्गीकृतं विद्यते। इन्द्रियद्वारैव विश्वसनीयं ज्ञानं लब्धुं शक्यं नान्यथा। इन्द्रियसन्निकर्षजन्यमेव यथार्थज्ञानम्। अनुमानप्रमाणेन समर्थितमनुमेयज्ञानं शब्दप्रमाणेन समर्थितं शाब्दज्ञानञ्च प्रमाणत्वेन नाङ्गीकुर्वन्ति ते। ते तु केवलं प्रत्यक्षज्ञानमेव प्रमाणत्वेन स्वीकुर्वन्ति।

अनुमानं तदैव तर्कपूर्णं तथा निश्चयात्मकं भवेत्, यदा व्याप्तिः सर्वथा निःसंदिग्धा भवेत्। व्याप्तिस्तदैव निःसन्दिग्धा यदा सर्वे धूमवन्तो वह्निमन्तः स्युः। इदञ्च तदैव स्याद्

यदा सर्वे धूमवन्तो दृष्टा भवेयुरथ च तैः सह वह्नेः सम्बन्धोऽपि दृष्टो भवेत् । इदन्तु सर्वथाऽसम्भावितं विद्यते, यतो हि वर्तमानकाल एव यावन्तो धूमवन्तः संसारस्य विभिन्ने भागे विद्यन्ते, त एव न केनापि दृष्टाः सन्ति, विद्यमानातिरिक्तानामतीतानामनागतानाञ्च का कथा । अतः सुस्पष्टमिदं यत्प्रत्यक्षेण व्याप्तिज्ञानं दुर्ज्ञेयमेव । अनुमानप्रमाणेनापि तदगम्यमेव, यतो येनानुमानप्रमाणेन व्याप्तिस्थापनं चिकीर्षितं तस्याप्यनुमानस्य सत्त्वं व्याप्त्यधीनमेव । व्याप्तिश्चाद्यावधि अनिष्पन्ना दोलायमाना मरुमरीचिकोदकायमानैव विद्यते । सकलधूमानां सकलवह्नीनाञ्च प्रत्यक्षत्वासम्भवात् सकलधूमगतधूमत्वस्य सकलवह्निगतवह्नित्वस्य सामान्यलक्षणस्य जातिभूतस्याप्यसंसिद्ध्या तेन सम्बन्धेनापि सकलधूमस्य सकलवह्नेश्चालौकिकप्रत्यक्षमसम्भावितमेवेति व्याप्तेः सर्वथैवाप्रसिद्धत्वादनुमानप्रमाणस्य खपुष्पायमानत्वमेव ।

किञ्च, कार्यकारणभावसम्बन्धद्वारापि व्याप्तिस्वरूपनिर्धारणमशक्यमेव, कार्यकारणभावसम्बन्धस्यापि व्याप्त्यात्मकत्वेन परिगृहीततया व्याप्तेश्चाद्यावधि व्याहतत्वात् ।

शब्दप्रमाणमपि ते नाङ्गीकुर्वन्ति, तत्र त इत्थं विचारयन्ति यद् योग्यव्यक्तीनां शब्दो न प्रमाणं किम् ? विश्वासयोग्यपुरुषप्राप्तज्ञानानुसारं वयं स्वकीयं कार्यं न कुर्मः किम् ? उत्तरयन्ति च ते यद् विश्वासयोग्यव्यक्तिद्वारोपलब्धं ज्ञानं शब्दराशिरूपेण प्राप्नोति। शब्दानां श्रवणं प्रत्यक्षम्। परन्तु शब्दराशिर्यदि प्रत्यक्षपदार्थान् बोधयति तदा तस्य प्रामाण्यम् । यदि चाप्रत्यक्षवस्तूनि बोधयति तदा तस्याप्रामाण्यमेव, अप्रत्यक्षवस्तुनोऽलीकस्य स्वर्गादेरस्माभिरनङ्गीक्रियमाणत्वात् । अलीकार्थबोधके वेदे कदापि विश्वासो न विधेयः । वेदस्तु धूर्तपुरोहितानां जीविकासाधकोऽविश्वसनीयः शब्दराशिः । अज्ञानान्धकारपरिप्लुतमनस्कान् मानवान् वञ्चयित्वा पुरोहिताः स्वकीयां जीविकां केवलां साधयन्ति ।

नन्वाप्तानां शब्दराशौ यद्यस्माकं विश्वासो न भवेत्तदास्माकं ज्ञानं संकुचितमथ च कार्यसञ्चालने महती बाधा स्यादित्याप्तोक्तशब्दप्रमाणमङ्गीकर्तव्यमिति चेन्न, शब्दप्रभवज्ञानानामनुमानप्रमाणगम्यत्वादनुमानप्रमाणस्य चासिद्धत्वात् । तत्रानुमानप्रकारः—आप्तोक्तं प्रमाणम् , आप्तोक्तत्वात् । इदञ्चानुमानं यत्र यत्राप्तोक्तत्वं तत्र तत्र प्रामाण्यमिति व्याप्तिज्ञानाधीनम् । तच्च दुर्घटम् , पूर्वोक्तकारणात् । तथा च यथाऽनुमानप्रामाण्यं सन्दिग्धम् , तथैव शब्दप्रामाण्यमपि सन्दिग्धमेव । सन्दिग्धात् प्रमाणाज्जायमानमनुमितिज्ञानं शाब्दज्ञानञ्च सन्दिग्धमेव । अतः प्रत्यक्षप्रमाणान्निःसन्दिग्धाज्जायमानं प्रत्यक्षज्ञानमेव केवलमेकं प्रमाणम् । तथा च स्थूलोऽहं कृशोऽहमित्यादिप्रत्यक्षानु-

भूतेः शरीरादतिरिक्तमात्मनोऽस्तित्वं नाङ्गीकरणीयं का कथा तन्नित्यत्वादीनाम्। मृत्य्वनन्तरं शरीरमिदं नष्टं भवति, जीवनस्य तत्रैव पर्यवसानं पृथ्वीजलतेजोवायुसंमिश्रणेन जायमानस्यागन्तुकस्य चैतन्यस्यापि शरीरेण सहैव विनाशः, अतः पुनर्जीवनस्यातीतजीवनस्य स्वर्गनरकादीनाञ्च कथा कपोलकल्पिता निराधारैव। वर्णितदर्शने जडभूतान्तर्निहितस्वभावादेव जगदुत्पत्तिरतो निमित्तकारणभूतस्येश्वरस्य कल्पनाऽपि सृष्ट्यर्थं निराधारा। अत एव चार्वाकमतं स्वभाववादपदेनापि व्यपदिश्यते यदृच्छावादपदेन वा। मतेऽस्मिन् जगदुत्पत्तिः कस्मैचित्प्रयोजनाय न भवत्यपि तु जडभूतानामाकस्मिकसंयोगवशादेव गीयते। मतमिदं प्रत्यक्षप्रमाणमेवाङ्गीकरोत्यतः प्रत्यक्षवादनाम्नापि व्यपदिश्यते।

## बौद्धमतम्

सर्वविधपुरुषार्थानां सम्यग्ज्ञानपूर्वकं निष्पत्तिः। सम्यग्ज्ञ.नं द्विविधम्—प्रत्यक्षमनुमानञ्च। तत्र अन्धकारालातचक्रशीघ्रभ्रमणनौकागमनादिभ्यो जायमानं वातपित्तश्लेष्मसंक्षोभाज्जायमानं च यद् भ्रमात्मकं ज्ञानं तद्भिन्नमथ च कल्पनाभिन्नं च यज्ज्ञानं तदेव प्रत्यक्षम्। तथा चोक्तम्—

"कल्पनापोढमभ्रान्तं प्रत्यक्षम्" (न्यायबिन्दौ)

एकस्मिन् ज्ञानेऽभिधेयाकारस्य (वस्त्वाकारस्य) अभिधानाकारेण (वाचकशब्दाकारेण) सह संसर्गयोग्यप्रतिभासप्रतीतिः कल्पना, यथा वृक्षशब्दोच्चारणेन चित्ते वृक्षशब्देन संसर्गवशाद् वृक्षशब्दानुरूपस्कन्धशाखादिमान् पदार्थः प्रतिभासते। एषा प्र तिभासप्रतीतिरेव कल्पना तद्भिन्नं प्रत्यक्षम्। उक्तञ्च—

"अभिलापसंसर्गयोग्यप्रतिभासप्रतीतिः कल्पना तया रहितम्" (न्यायबिन्दौ)

वाचकाकारसंसर्गवती प्रतीतिः कल्पना, कल्पनायामर्थोपस्थितेरपेक्षा न भवति। किन्तु बौद्धप्रत्यक्षज्ञानं तु वस्तुसान्निध्ये सम्भवते। वस्तुसान्निध्यमन्तरा नान्यः कश्चनोपायः प्रत्यक्षे। फलतः कल्पनारहितं निर्भ्रान्तज्ञानं प्रत्यक्षम्।

तच्चेन्द्रियज्ञानमनोविज्ञानात्मसंवेदनयोगिज्ञानभेदाच्चतुर्विधम्। इन्द्रियाश्रितं ज्ञानमिन्द्रियप्रत्यक्षम्। इन्द्रियप्रत्यक्षसमनन्तरं मनआश्रितं ज्ञानं मनोविज्ञानम् (मनःप्रत्यक्षम्)।

बौद्धदर्शने ज्ञानस्य चत्वारि कारणानि। यत्र नेत्रेण घटोऽवलोक्यते तत्र ज्ञानस्य प्रथमं कारणं स्वयं घटोऽस्ति, एतन्नाम आलम्बनप्रत्यय इति।

ज्ञानस्य द्वितीयं कारणं प्रकाशो यत आलोकसाहाय्यमन्तरा इन्द्रियाणि कमपि विषयं ग्रहीतुं न शक्नुवन्ति, अत एवास्य सहकारिप्रत्यय इति नाम।

तृतीयं ज्ञानकारणमिन्द्रियाणि अधिपतिप्रत्ययसंज्ञकानि।

तुरीयं ज्ञानकारणं मनः समनन्तरनामकम्। तदुक्तम्—

"स्वविषयानन्तरसहकारिणेन्द्रियज्ञानेन समनन्तरप्रत्ययेन जनितं तन्मनोविज्ञानम्"

(न्यायबिन्दौ)

बौद्धदर्शने यद्यप्यात्मसंज्ञको जीवसंज्ञको वा कश्चन पदार्थो नास्ति, तथाप्यहं सुखी, अहं दुःखी इत्यादिप्रत्यया जायन्ते। एवंविधप्रत्यया एव स्वसंवेदनसंज्ञका आत्मसंवेदनसंज्ञका वा कथ्यन्ते। तथा चोक्तम्—

"सर्वचित्तचैत्तानामात्मसंवेदनम्" (न्यायबिन्दौ)।

बाह्यार्थास्तित्ववादिबौद्धानां नये प्रत्येकं वस्तु द्विविधम्—बाह्यमान्तरञ्च। बाह्यं द्विप्रकारकं भूतं भौतिकञ्च। भूतं पृथिव्यादयश्चत्वारः परमाणवः, भौतिकं रूपादयश्चत्वारः। तथान्तरमपि द्विविधं चित्तं चैत्तञ्च, चैत्तं चैत्तिकञ्च नार्थान्तरम्। चैत्तिकं रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पञ्च स्कन्धाः। विज्ञानं द्विविधम्—आलयविज्ञानमहमित्याकारकम्, प्रवृत्तिविज्ञानमिन्द्रियादिजन्यं रूपादिविषयञ्च।

योगिप्रत्यक्षं सद्भूतस्यैवार्थस्य न त्वसद्भूतस्यार्थस्य, सद्भूतस्याप्यर्थस्य प्रत्यक्षमल्पं न भवत्यपि तु प्रकृष्टं भवति। तदुक्तम्—

"भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानं च" इति।

बौद्धनये सविकल्पकस्य मिथ्याभूतत्वान्निर्विकल्पकमेव प्रत्यक्षप्रमाणम्। यस्य विषयस्य सामीप्येनासामीप्येन च ज्ञानस्य प्रतिभासे भेदो भवति, स एव स्वलक्षणपदेन गृह्यते, तदेव च परमार्थे सत्, यतस्तदेव वस्तुत्वर्थक्रियां कारयति। स्वलक्षणभिन्नं सामान्यलक्षणं त्वनुमानस्य विषयो भवति, न तु प्रत्यक्षस्य विषयः। स्वं स्वरूपं लक्षणं व्यावर्तकं यस्य तत् स्वलक्षणम्, स्वलक्षणं व्यक्तिर्विषयो यस्य तादृशं स्वलक्षणविषयम्। अनारोपितरूपतः प्रत्यक्षं लिङ्गागमाभ्यां प्रतीयमानो विषयः सामान्यरूपेणावगम्यते, न तु विशेषरूपेण। तथा सति सविकल्पकमनुगतमेवाकारमवगाहते, न तु सर्वतो व्यावृत्तमिति तन्न प्रत्यक्षम्, परमार्थतः सामान्यस्य सत्ताया अनङ्गीकारात्। तथाहि—

सामान्यं वस्तुषु कात्स्न्येंन वर्तत उत एकदेशेन ? नाद्यस्तथा सत्यन्यस्यां व्यक्तौ तत्प्रतीत्यनुपपत्तेः। न चान्तिमो निरंशस्य सामान्यस्य देशकल्पनाया असम्भवात्। घटोऽयमित्यादिप्रतीतेरघटव्यावृत्तोऽयमित्याद्यर्थेन सर्वत्र सामान्यस्यान्यापोहरूपतयैव भानात्, सामान्यस्य खपुष्पवदत्यन्तासत्त्वात्।

ननु यदि सामान्याभावस्तदा विविधासु व्यक्तिषु कथमन्वयिप्रत्यय इति चेन्न, शब्दस्य गौरित्यादेर्व्यक्तेश्च वर्णसंस्थानविशेषस्य आकारस्तद्वत्प्रतीयमानत्वात्। तदुक्तम्—"यदप्यन्वयिविज्ञानं शब्दव्यक्त्यवभासि तत्" (प्रमाणवार्त्तिके)। वर्णो नीलादिराकृतिः संस्थानमक्षरं गवादिशब्दस्तेषामाकारो यथा प्रतीतः, तेन शून्यं गोत्वं हि सामान्यवादिभिर्वर्ण्यते। तदुक्तम्—

"वर्णाकृत्यक्षराकारशून्यं गोत्वं हि वर्ण्यते" (प्रमाणवार्त्तिके)

अतोऽन्वयिविज्ञाने वर्णसंस्थानादि प्रतीयते न तु तत्सामान्यम्। जातिविशिष्टा बुद्धिर्विशेष्यविशेषणसम्बन्धविषया विशिष्टबुद्धित्वात्—इत्याद्यनुमानेन सिद्धभावस्य समवायस्य सत्तापि नाङ्गीकरणीयाऽतीन्द्रियत्वात्तस्याक्षभवैर्विज्ञानैरग्रहणाद् बौद्धनये जातेरनङ्गीकारात्। सामान्यसत्त्वस्थापकसमवायस्यासिद्धया सामान्यासिद्धिः सुतराम्। जातिविशिष्टबुद्धेरनिष्पन्नत्वादनुमानप्रमाणेनापि समवायस्य दुःसाध्यत्वमेव। तथा च समवायासिद्धौ तद्विशिष्टस्य सविकल्पकस्यासिद्धिः सुस्पष्टेति न तत्प्रत्यक्षम्।

ननु समवायाभावे इह तन्तुषु पट इत्यादयो बुद्धयो न स्युरिति चेन्न, "पटस्तन्तुष्विहेत्यादिशब्दाश्चेमे स्वयं कृताः" इत्यादिना प्रमाणवार्त्तिके समयानुलोचनैस्तादृशबुद्धीनामस्तित्वस्य स्वयं सम्पद्यमानत्वात्, तासां वस्तुपराधीनत्वस्यानङ्गीकारात्। तथाहि—

शृङ्गे गवि तिष्ठतीति लोके प्रमाणप्रसिद्धयोरनुरोधात् शृङ्गे गौरिति तु तदुपकल्पितमलौकिकं प्रमाणप्रसिद्धिबहिर्भावात्। अवयवातिरिक्तस्यावयविनोऽनङ्गीकाराच्चावयविविशिष्टत्वेनापि समवायस्य सिद्धिर्दुःशकैव।

ननु यदि तन्तवः केवला न तेभ्यः पटोऽन्यस्तदा पटव्यवहारो निर्निबन्धनः इति चेन्न, तन्तुभिः परस्परं शीताद्यपनोदक्षमस्य साहित्यस्योपकार्योपकारित्वस्य सम्पादिततयाऽन्योन्यस्य विच्छेदाद् दृष्टेरेव पटव्यपदेशनिबन्धकत्वाद्वा।

नन्ववयवातिरिक्तस्यावयविनोऽनङ्गीकारे परमाणूनामतीन्द्रियत्वेन घटस्याप्रत्यक्षत्वापत्तिरिति चेन्न, परमाणोरेकस्यातीन्द्रियत्वेऽपि तत्पुञ्जभूतस्य घटस्य सेन्द्रियतया प्रत्यक्षत्वे बाधकत्वाभावात्।

न च प्रत्यक्षे महत्त्वस्य प्रयोजकत्वात् परस्परविभक्तपरमाणूनां महत्त्वाभावात् परमाणुपुञ्जभूतस्य घटस्याप्रत्यक्षत्वमेवेति वाच्यम्, परस्परविभक्तपरमाणूनां महत्त्वाभावादप्रत्यक्षत्वेऽपि परस्परसंयुक्तानां पुञ्जात्मनां तेषां प्रत्यक्षे बाधकाभावात् । न च महत्त्वाभाव एव बाधकः, परस्परविलक्षणसंयोगरूपस्यैव महत्त्वस्य प्रत्यक्षजनकत्वात् । न च परमाणूनां नित्यत्वाद् घटादावुत्पत्तिविनाशप्रतीत्यनुपपत्तिरिति वाच्यम्, तन्मते पदार्थमात्रस्य क्षणिकत्वात् परमाणूनामुत्पत्तिविनाशयोः स्वीकृतत्वात् । न च परमाणुपुञ्जेषु घटत्वाङ्गीकारे कपालाद् घट इति प्रतीत्यनुपपत्तिः, परमाणूनां कपालजन्यत्वाभावादिति वाच्यम्; तन्मते कपालस्यापि परमाणुपुञ्जरूपतया घटरूपपरमाणुपुञ्जेषु कपालरूपपरमाणुपुञ्जजन्यत्वाङ्गीकारात् पुञ्जात् पुञ्जोत्पत्तेस्तेषां नये सिद्धान्तितत्वात् ।

## जैनमतम्

जैननये जीवस्य चैतन्यं स्वरूपमस्ति, चार्वाकवन्नाङ्गीकुर्वन्त्येते चैतन्यमागन्तुको गुण इति। मतेऽस्मिन् चैतन्यं सूर्योपमम् । यथा सूर्यः सर्वाणि वस्तूनि प्रकाशयन्नात्मानं प्रकाशयति, तथैव चैतन्यमपि वस्तून्यन्यानि प्रकाशयदात्मानमपि प्रकाशयति । उक्तञ्च—"विज्ञानं स्वपराभासि प्रमाणं बाधवर्जितम्" ( सिद्धसेनदिवाकरकृते न्यायावतारसूत्रे ) इति ।

सूर्यो यथा केनाप्यावरणेनावृतो सम्यङ् न प्रकाशयति, तथैव जीवोऽपि बन्धनावरणेनावृतोऽनन्तज्ञानस्य प्रसारं न सम्पादयति । यदा बन्धनोन्मूलनं सम्पद्यते तदा जीवोऽनन्तज्ञानमयो विजायते । प्रत्येकस्मिन् जीवेऽनन्तज्ञानस्य शक्तिरस्ति । परन्तु विविधबाधाक्रान्तो जीवः सहजां सर्वज्ञतां न प्राप्नोति । बन्धनेन हेतुना जीवस्य ज्ञानं न्यूनं सीमितञ्च सम्पद्यते । ज्ञानस्य परिमितत्वं जैननये कर्मजन्यबाधाभिर्गीयते । नानाविधबाधाक्रान्तो जीवः सर्वज्ञताविरहितो जायते । मनःशरीरेन्द्रियाणि कर्मभिरेवोत्पद्यन्ते । मनःशरीरादीनाञ्च वर्तमानत्वे जीवस्य स्वाभाविकी शक्तिः परिमिततामापद्यते ।

दर्शनान्तरवज्जैनदर्शनेऽपि ज्ञानस्य द्वैविध्यं परोक्षापरोक्षत्वभेदात् । इदमपि चामनन्त्येते यद् यज्ज्ञानं साधारणतयाऽपरोक्षमिति तन्न, सर्वथा अपरोक्षम् । किन्तु आपेक्षिकमपरोक्षत्वं तस्य । इन्द्रियादिभिर्जन्यं यज्ज्ञानं बाह्यं मनसा जायमानं यच्चान्तरं ज्ञानं तदनुमानापेक्षया अपरोक्षन्न तु पूर्णतया अपरोक्षमिति । अत एवागमकाले जैनदर्शने परोक्षज्ञानस्य स्वरूपं परैरिन्द्रियादिभिरुह्यते सिच्यते यज्ज्ञानं तत् परोक्षमिति स्वीकृतमासीत् । इदानीञ्च जैनदर्शने तस्य सांव्यवहारिकप्रत्ययत्वेन व्यवहारो जायते । जैननये प्रत्यक्षसामान्यलक्षणम्—

## प्रत्यक्षज्ञानमीमांसा

"विशदं प्रत्यक्षम्" ( प्रमेयकमलमार्तण्डे ) ।

विशदज्ञानात्मकं प्रत्यक्षं प्रत्यक्षत्वात् । यत्तु न विशदात्मकं तन्न प्रत्यक्षं यथानुमानादि । वैशद्यस्यापि लक्षणं तत्रैव प्रमेयकमलमार्तण्डे—

"प्रतीत्यन्तराव्यवधानेन विशेषवत्तया वा प्रतिभासनं वैशद्यम्" इति ।

अकलङ्कदेवेनापि प्रत्यक्षसामान्यलक्षणं तादृशमेवोद्घोषितम्—

"प्रत्यक्षलक्षणं प्राहुः स्पष्टं साकारमञ्जसा" ( न्यायविनिश्चये ) ।

यदा साकारज्ञानमञ्जसा परमार्थरूपेण विशदं भवति तदा तत्प्रत्यक्षमिति । तेनैवाकलङ्कदेवेनापि विशदस्यापि स्वरूपमुपदर्शितम्—

अनुमानाद्यतिरेकेण विशेषप्रतिभासनम् ।
तद् वैशद्यं मतं बुद्धेरवैशद्यमतः परम् ॥ ( लघीयस्त्रये )

यस्मिन् ज्ञानेऽन्यज्ञानस्य साहाय्यं नापेक्षितं तद् विशदमिति ।

ननु परोक्षेऽपि स्मृतिप्रत्यभिज्ञादिस्वरूपसंवेदनेऽस्याध्यक्षलक्षणस्यातिव्याप्तिरिति चेन्न, तस्य परोक्षत्वाभावात् । स्मृत्यादीनां स्वरूपसंवेदनस्यानिन्द्रियप्रधानतयोत्पत्तेरनिन्द्रियाध्यक्षव्यवहारोपपत्तेः सुखादिस्वरूपसंवेदनवत् ।

नन्वेवं स्मृत्यादीनां परोक्षत्वव्यपदेशोऽसंगत इति चेन्न, बहिरर्थग्रहणापेक्षया विज्ञानानां प्रत्यक्षेतरत्वव्यपदेशो बहिरर्थग्रहणे प्रमाणान्तरव्यवधानाव्यवधानसद्भावे नावैशद्यसम्भवात्, न तु स्वसंवेदनापेक्षया तत्र प्रमाणान्तरव्यवधानाभावात् । तथा च दोषशून्यत्वादवैशद्यं प्रत्यक्षस्वरूपमङ्गीकर्तव्यं नेन्द्रियार्थसन्निकर्षोत्पन्नं प्रत्यक्षस्वरूपं स्वीकर्तव्यम्, तस्य स्वरूपस्याव्यापकत्वादतीन्द्रियप्रत्यक्षे सर्वज्ञविज्ञाने चासत्त्वात् । तच्च प्रत्यक्षं द्विविधम्—पारमार्थिकं सांव्यवहारिकं चेति । तत्र पारमार्थिकं प्रत्यक्षम्—अक्ष्णोति व्याप्नोति जानातीत्यक्ष आत्मा, प्राप्तक्षयोपशमं प्रक्षीणावरणं वा अक्षं प्रति नियतं प्रत्यक्षम् ।

नन्वेवमवधिदर्शनस्य केवलदर्शनस्य चात्मप्रतिनियतत्वात् प्रत्यक्षलक्षणस्यातिव्याप्तिरिति चेन्न, तत्र ज्ञानस्यापि विशेषणत्वेनाङ्गीक्रियमाणतया दर्शनातिव्याप्तेर्व्युदासात् ।

न चैवमपि विभङ्गज्ञानमक्षमेव प्रतिनियतमिति तदवारणात्तत्रातिव्याप्तिरिति वाच्यम्, सम्यक्त्वस्यापि तत्र विशेषणतया मिथ्यादर्शनादुदीयमानस्य विभङ्गज्ञानस्य विपरीतपदार्थविषयकतया प्रसक्तातिव्याप्तेर्निरासात् ।

नन्वेवमपि इन्द्रियव्यापाराज्जायमानं प्रत्यक्षं तद्भिन्नं परोक्षमिति प्रत्यक्षपरोक्षयोरविसंवादि-लक्षणमङ्गीकरणीयमिति चेन्न, आप्तानामिन्द्रियव्यापारमन्तरैव ज्ञानोदयादाप्तप्रत्यक्षेऽव्याप्तेर्वज्रलेपायितत्वात्। यदीन्द्रियव्यापारपूर्वकमेवाप्तानामपि ज्ञानमङ्गीक्रियेत तदा सर्वज्ञत्वसंव्यवहारोऽभ्युपेतव्यो भवेत्। न चाप्तानां मानसप्रत्यक्षमेव जायत इत्यङ्गीकारेण दोषसंभावना नेति वाच्यम्, मनःप्रयत्नेन ज्ञानोत्पत्तौ स्वीकृतायामपि सर्वज्ञत्वाभावस्यैव प्रसञ्जनात्।

न चागमात् सर्वपदार्थपरिज्ञानसंभवे न कश्चन दोषावसर इति वाच्यम्, प्रत्यक्षज्ञान-पूर्विकायाः सर्वज्ञताया एव विलोपापत्तेः।

न चैवमपि योगिप्रत्यक्षनामकमेकं दिव्यज्ञानमन्यदङ्गीक्रियतां का हानिरिति वाच्यम्, तावतापि तस्य न प्रत्यक्षत्वम्, इन्द्रियव्यापारनिमित्तत्वाभावात्, अक्षमक्षं प्रति वर्तते यत्तस्यैव भवन्मते प्रत्यक्षत्वेनाङ्गीक्रियमाणात्।

किञ्च, बौद्धनयेऽक्षमक्षं प्रति यद् वर्तते तत्प्रत्यक्षमिति प्रत्यक्षलक्षणे स्वीक्रियमाणे सर्वज्ञत्वस्य हानिः प्रतिज्ञाया हानिश्चेति दोषद्वयं प्रसक्तं स्यात्। तथाहि—

योगिज्ञानं प्रत्येकं पदार्थं क्रमशो विषयीकरोति, अथवाऽनेकान् पदार्थान् युगपद्विषयी-करोति ? यदि प्रत्येकं पदार्थं क्रमशो गृह्णाति, तदा ज्ञेयानन्त्याद् योगिनःसर्वज्ञत्वस्य विलोपप्रसङ्गः। यदि चानेकान् पदार्थान् युगपद् गृह्णाति, तदा यथैकं विज्ञानं पदार्थद्वयं न गृह्णाति तथैव विज्ञान-द्वयमप्येकमर्थं न गृह्णातीति प्रतिज्ञायाः हानिः, अथवा सर्वे पदार्थाः क्षणिका इति प्रतिज्ञाया हानिर्यतो भवन्मतेऽनेकक्षणावस्थायि विज्ञानमेकं स्वीकृतं विद्यते, अनेकपदार्थग्रहणं च क्रमश एव जायते।

न चानेकपदार्थग्रहणमेकदैव जायत इति स्वीक्रियमाणे न प्रतिज्ञाहानिरिति वाच्यम् ज्ञानोत्पत्तिकालस्य स्वरूपलाभार्थत्वेनाङ्गीक्रियमाणतया तद्दोषस्य तादवस्थ्यात्, लब्धात्मलाभं हि किञ्चित् स्वकार्यं प्रति व्याप्रियत इति न्यायस्य जागरूकत्वात्।

न च प्रदीपवत् सहैवोभयं सम्पन्नमिति वाच्यम्, तस्याप्यनेकक्षणविषयतायां सत्यामेव प्रकाश्यप्रकाशनाभ्युपगमात्। विज्ञानस्य विकल्पातीतत्वे तु शून्यताप्रसक्तेर्वारणं दुःशकमेव।

इदञ्च पारमार्थिकमपरोक्षज्ञानं ज्ञेयवस्तुना सहेन्द्रियादिसन्निकर्षमन्तरैवात्मनि जायते। यावत्कर्मबाधायाः सत्त्वं तावदिदमपरोक्षज्ञानं नोदेति, किन्तु सर्वकर्मणां नाशे सति सर्वासां बाधानां विनाशे जायमाने पारमार्थिकमपरोक्षज्ञानमिदमात्मनि जायते, योगिप्रत्यक्षशब्देनापीदं व्यवह्रियते।

( सावशेषम् )

———

# कालवदनः कालदमनो वा ?

श्रीव्रजवल्लभद्विवेदः, अनुसन्धानसंस्थानम्, वा० सं० वि० वि० वाराणसी।

वामनपुराणस्य षष्ठाध्यायस्य ८६–९१ श्लोकेषु हरार्चकानां चत्वारो भेदाः[१] प्रदर्शिताः। तत्र तृतीयः कालवदनाख्यः। एवं वर्तते तत्रत्यः सन्दर्भः[२]—

ततश्चकार भगवांश्चातुर्वर्ण्ये हरार्चने।
शास्त्राणि चैषां मुख्यानि नानोक्तिविदितानि च॥
आद्यं शैवं परिख्यातमन्यत् पाशुपतं मुने।
तृतीयं कालवदनं चतुर्थं च कपालिकम्॥
शैवस्त्वासीत् स्वयं शक्तिर्वसिष्ठस्य प्रियः सुतः।
तस्य शिष्यो बभूवाथ गोपायन इति श्रुतः॥
महापाशुपतस्त्वासीद् भरद्वाजस्तपोधनः।
तस्य शिष्योऽप्यभूद् राजा ऋषभः सोमकेश्वरः॥
कालास्यो भगवानासीदापस्तम्बस्तपोधनः।
तस्य शिष्योऽभवद्वैश्यो नाम्ना क्राथेश्वरो मुने॥
महाव्रती च धनदस्तस्य शिष्यश्च वीर्यवान्।
ऊर्णोदर इति ख्यातो जात्या शूद्रो महातपाः॥ (८६–९१)

अत्र प्रथमं प्रथमश्लोकस्थं चातुर्वर्ण्यपदं कर्षति मनांसि नः। चत्वारो वर्णाः सुपरिचिता आबालगोपालं भारते वर्षे। चतुर्णां वर्णानामत्र प्रतिपादितैश्चतुर्भिर्मतैः सह यथाक्रममन्वये कृते ब्राह्मणः शैवमतेन, क्षत्रियः पाशुपतमतेन, वैश्यः कालास्यमतेन, शूद्रः कापालिकमतेन शिवं पूजयतीत्यायाति। एवमेवात्राग्रिमेषु श्लोकेषु स्पष्टमेव प्रतिपादितम्। चतुर्णामेषां मतानां

---

१. अस्मिन् प्रसङ्गे विशेषजिज्ञासुभिः पुराणपत्रिकायां (७ व. १ अ.) प्रकाशितस्य मदीयस्य 'शिवपुराणीयं दर्शनम्' इत्याख्यस्य निबन्धस्य १६२–१६५ पृष्ठान्यवलोकनीयानि।

२. काशिराजन्याससंस्थायां संकलितानां पाठानामाधारेणास्य सन्दर्भस्य परिष्कृतः पाठोऽत्र स्थापितः। एतदर्थं साहाय्यं ददते तत्रत्याय वरिष्ठाय सदस्याय पुराणपत्रिकाया अन्यतम-सम्पादकाय श्रीमते आनन्दस्वरूपगुप्तमहोदयाय कृतज्ञतां वितरामः।

चातुर्वर्ण्येन सह यथाक्रममत्र प्रदर्शितरीत्यैवान्वयः सामस्त्येन वेत्यत्रैतिहासिकानि प्रमाणान्यन्वेषणीयानि। तान्त्रिक्यां संस्कृतौ वर्णाश्रमव्यवस्था न तथा दाढर्येन पालिता, यथा हि वैदिक्याम्। पुराणानि प्राधान्येन वैदिकीमेव संस्कृतिमनुसरन्ति, अथापि तान्त्रिक्या संस्कृत्या सह वैदिक्याः संस्कृतेः समन्वयमपि समुपस्थापयन्ति। अत्र चतुर्षु शैवमतेषु चातुर्वर्ण्यस्य सम्बन्धः समन्वयपद्धतेरेव महिमा प्रतीयते।

तदनु कालवदनशब्दः परीक्ष्यताकोटिमाटीकते। अत्र मुद्रिते वामनपुराणपुस्तके कालदमन इति पाठो वर्तते। काशीराजन्याससंस्थायां संगृहीतासु सप्तदशमातृकासु पञ्चदशमातृकाः कालवदन इत्येव पाठं धारयन्ति। स एव शुद्धः पाठः। अत्र न केवलं मातृकाबाहुल्यदर्शनं हेतुः, अपि त्वन्यान्यपि प्रमाणानि तदुपोद्बलकानि दृश्यन्ते। तथाहि—वामनपुराण एवान्यत्र (६७। १०–१३) शैवाः, पाशुपताः, कालमुखाः, महाव्रतिनश्चेति चत्वारो भेदाः प्रदर्शिताः। अत्र वदनशब्दस्य स्थाने तत्पर्यायो मुखशब्दः प्रयुक्तः। उपर्युद्धृते चतुर्थे श्लोकेऽपि चतुर्णां मतानां प्रवर्तकानां तच्छिष्याणां च नामसु 'कालास्य' इति नाम तृतीयसम्प्रदायप्रवर्तकस्यास्ते। आस्यशब्दोऽपि वदनपर्याय एव। कालमुखा एव यामुनाचार्यविरचित आगमप्रामाण्ये (पृ० ४७) कालामुखशब्देनोक्ताः। एवं च कालवदन इति, कालास्य इति, कालमुख इति, कालामुख इति चैकस्यैव मतस्य बोधकानि पदानीति मन्तव्यम्। कालदमन इति पाठस्तु लेखकप्रमादपतितः प्रतिभाति।

तृतीयोऽयमत्र विषयः परामर्शपदवीमानेतव्यो यच्चतुर्थमतप्रवर्तकस्य धनदस्य महाव्रतीति विशेषणं किं सूचयतीति। एतत्साधयति यत् कापालिका एव महाव्रतिनः। वामनपुराण एवान्यत्र (६७।१०–१३) महाव्रतिन एव सूचिताश्चतुर्थस्य कापालिकमतस्य पर्यायत्वेन। महाशङ्खमाला-महापात्र-महाप्रसादप्रभृतीनां पदार्थानामुपयोक्तारः कापालिका एव सत्यं महाव्रतिनः प्रतीयन्ते। एवं च—"शैवा महाव्रतधराः शैवाः कापालिकाः परे" (७ उ.।२१।१७३) इति शिवपुराणेऽनयोः पृथक्त्वेन निर्देशः कथं नाम संगच्छेतेति विभावनीयम्।

अन्ते चेदमत्र विमृशामो यदत्रोद्धृतेष्वन्तिमानां चतुर्णां श्लोकानां पूर्वार्धेषु तत्तन्मतप्रवर्तकानामाचार्याणाम्, उत्तरार्धेषु च तेषां प्रथमस्य शिष्यस्य नाम स्थापितम्। तत्र पूर्वार्धेषु प्रतिपादिता आचार्या ऋषयः प्रतीयन्ते, उत्तरार्धेषु चैतिहासिक्यो व्यक्तयः। इमे एव वस्तुतोऽमीषां मतानां प्रवर्तकाः स्युः। तत्र ऋषभ इत्यस्य स्थाने ऋषय इति, क्राथेश्वर इत्यस्य कापालिक इति, ऊर्णोदर इत्यस्य स्थाने अर्णोदर इति इति च पाठो दृश्यते। किमेषां वास्तविकं नाम? कदा कस्मिन् वा प्रदेशे इमे प्रादुर्भूताः? कीदृशी चैषां शिष्यपरम्परा? मतवादश्चैषां कीदृशः? इत्यादयः प्रश्नाः स्वं समाधानमपेक्षन्ते !!



# वार्षिकविषयसूची





# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१. एषा देशे विदेशे च लब्धप्रसारा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठभाद्रपदमार्गशीर्षफाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां मौलिकविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. लेखकेन प्रकाशितस्य निबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः।

६. अस्या वार्षिकं मूल्यं सप्त रूप्यकाणि, प्रत्यङ्कं च रूप्यकद्वयं वर्तते।

७. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी–२" इति संकेतेन विधेयः।

---

प्रकाशक—अनुसन्धान, संचालक—अनुसंधान संस्थान, संस्कृतविश्वविद्यालय, वाराणसी।
मुद्रक—श्री बलदेवदास, संसार प्रेस, संसार लिमिटेड, काशीपुरा, वाराणसी।